योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 334 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 28 सितम्बर 2021 मंगलवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

यस्मिन् देशे न सम्मानो न
वृत्तिर्न च बान्धवाः।
न च विद्यागमोऽप्यस्ति
वासस्तत्र न कारयेत्॥

अर्थ– ऐसा देश जहाँ पर कोई सम्मान नहीं हो, जीने के लिए कोई आजीविका नहीं मिले, कोई अपना भाई और बन्धु नहीं रहता हो, जहाँ पर विद्या ग्रहण करने की संभवना नहीं हो, ऐसे स्थान पर रहना नहीं चाहिए।

### संक्षिप्त वर्ताः

## गुलाब् चक्रवातः भूमिं स्पृष्टवान्

**आन्ध्रा ओडीषा राज्येषु जाग्राता निर्देशः ख्यापितः।**

नवदेहली आन्ध्रा ओडीषा राज्येषु कुलं प्राप्तवान् गुलाब् चक्रवातः। होरायां पञ्चनवति किलोमीट्र् वेगेन प्रतीच्यां प्रति गत्वा चक्रवातेन आन्ध्रा-ओडीषयोः कुलम् अधिगम्यते। चतुर्मासाभ्यन्तरे ओडीषायां जातः द्वितीयवातः भवति गुलाब्। पूर्वं यास् चक्रवातः नाशं कृतवान्। अपघात साध्यतां निधाय चतसृषु जनपदेषु सुरक्षा प्रक्रमाः स्वीकृताः इति मुख्यमन्त्रिणा नवीन् पटनायिकेन उक्तम्। ओडीषायाः दुरन्तनिवारणसेनायाः 42 गणाः राष्ट्रिय दुरन्त निवारण सेनायाः 24 सुरक्षा दलाः च अत्र विन्यस्थाः सन्ति। राज्यस्य आरक्षक सेना अग्निशमन सेना च प्रवर्तनसज्जौ भूत्वा तिष्टन्तः सन्ति।

### उत्तरप्रदेश संस्कृत संस्थान पक्षतः प्रशासनिक सेवायै अभवत् प्रवेश परीक्षायायां सम्मिलिताः पञ्चशताधिकाः छात्राः

# उत्तरप्रदेशे संस्कृतेन प्रशासनिकसेवायाः सिद्धतां कुर्वतां छात्राणां सङ्ख्या सार्धद्विगुणिता वर्धिता



**लखनऊ।** उत्तरप्रदेश संस्कृत संस्थानेन संपृक्ताः देशस्य विदेशस्य च छात्राः केवलं संस्कृतं वक्तुं जानन्ति अपि च संस्कृतेन प्रशासनिक सेवायाः सिद्धतां कुर्वतां छात्राणां सङ्ख्या अपि वर्धिता अस्ति। संस्कृतं प्रति उत्साहस्य अनुमानम् एतया वार्तया अभिज्ञातुं शक्यते यत् अस्मिन् वर्षे संस्कृतेन प्रशासनिकसेवायाः निःशुल्क सिद्धतायै आयोजिता प्रवेशपरीक्षा पञ्चशताधिकाभिः छात्राभिः लिखिता। संस्थानानुसारं गतवर्षस्य अपेक्षया छात्राणां सङ्ख्या सार्धद्विगुणिता वर्धिता। संस्कृतं समुन्नेतुम् अभियानमिदं कीर्तिमानं प्राप्नोति। उत्तरप्रदेश संस्कृत संस्थानस्य ऑनलाइन संस्कृत कक्षासु छात्राणां सङ्ख्या षष्टिसहस्रपर्यन्तं प्राप्ता । तत्रैव, संस्कृेत विषयम् स्वीकृत्य भारतीय प्रशासनिक सेवाधिकारिपदम् अवाप्तुं सज्जाकुर्वतां छात्राणां सङ्ख्यायाम् अत्यधिकं वर्धनम् अभवत् । उत्तर प्रदेश संस्कृत संस्थान पक्षतः संस्कृतविषये प्रशासनिक सेवा परीक्षायाः सिद्धता कार्यते । एतन्निमित्तं संस्थान पक्षतः निःशुल्कम् अनुशिक्षण केन्द्रस्य सञ्चालनं क्रियते। छात्राणां चयनं द्वयोः चरणयोः आयोज्यते। प्रथमचरणे प्रवेश परीक्षायाः आयोजनं भवति । पुनः योग्यताधारेण छात्राः साक्षात्काराय आहूयन्ते । एतेषु षष्टिच्छात्राणां चयनं क्रियते यद्यपि उत्तरप्रदेश सङ्घलोक सेवा योगस्य प्रारम्भिक परीक्षा उत्तीर्णवतां दश–पञ्चदशच्छात्राणां चयनं पृथकतया क्रियते। संस्थान पक्षतः आहत्य पञ्चसप्ततिच्छात्राणां चयनं क्रियते, यान् संस्कृतस्य विद्वांसः प्रशासनिक सेवायै सिद्धतां कारयन्ति ।

### प्रवेश परिक्षायाः सिद्धतया सह प्राप्यते संस्कृत्याः संस्कृतस्य च ज्ञानम्

## उत्तर प्रदेशेन सह अपर राज्यानां छात्राः अपि कुर्वन्ति सिद्धताम्

उत्तर प्रदेश संस्कृत संस्थानस्य अध्यक्षस्य वाचस्पति मिश्रस्य अनुसारं संस्कृतेन प्रशासनिक सेवायाः सिद्धतां कुर्वत्सु उत्तर प्रदेशम् अतिरिच्य अपरराज्येषु एतेषु केरलः, राजस्थानः, हरियाणा, बङ्गालः, देहली, आन्ध्र प्रदेशः पञ्जाबः चे-त्यादीनां छात्र– च्छात्राः अपि सिद्धतानिमित्तम् आगच्छन्ति । नवम्बर मासस्य प्रथम दिनाङ्कतः आरब्ध मानस्य तृतीय सत्रस्य कक्षाभ्यः अस्मिन् पर्याये षड्चत्वारिंशदधिक नवशतेन जनैः पञ्जीकरणं कारितम् अपि च पञ्चाशताधिकाः जनाः प्रवेश परीक्षाम् अपि लिखित वन्तः । गत सत्राणाम् अपेक्षया अस्मिन् पर्याये प्रायेण सार्धद्वि गुणिता सङ्ख्या वर्धिता ।




## सर्वकारस्य उपक्रमः सराहनीयः

गतसत्रद्वयोः संस्कृतभाषया प्रशासनिकसेवापरीक्षाम् उत्तीर्य उद्योगविभागे सहायकायुक्ता अभवत् अल्कावर्मा उक्तवती यत् सर्वकारस्य एषः उपक्रमः वास्तविकतायां सराहनीयः अस्ति । योगिसर्वकारेण मध्यमवर्गीयछात्राणां साहसः वर्धितः। विशेषतया केन्द्रिय विश्वविद्यालयानां प्रवक्तृभिः पाठनम् अत्यन्तं लाभदायकम् अस्ति । वर्तमाने खण्डशिक्षाधिकारिपदे कार्यरतः प्रशान्तसिंहराठौरः वदति यत् संस्कृतेन प्रशासनिकसेवायाः सिद्धतया सह अस्माभिः संस्कृत्याः संस्काराणाम् अपि ज्ञानं प्राप्यते। संस्कृतप्रशासनिकसेवानुशिक्षणस्य लाभं प्राप्य जिलाशिक्षाप्रशिक्षणसंस्थानस्य प्रवक्ता मनीषसिंहः वदति यत् संस्कृतस्य प्रतियोगीपरीक्षासु जनाः न द्रक्ष्यन्ते स्म तत्रैव वर्तमाने प्रत्येकस्यां परिक्षायां संस्कृतस्य प्रभावः अस्ति।

# पीएचसी–सीएचसी–इत्यनयोः नवसहस्त्रं शय्याः वर्धयितुं सिद्धता

### सीएचसी–पीएचसी–इत्यनयोः सुविधासु क्रियते तीव्रतया विस्तारः,प्री-फैब्रिकेटेड विभाग निर्माणेन स्थानीय रोगिभ्यः प्राप्स्यते सुविध






**लखनऊ।** उत्तरप्रदेशे कोरोणासङ्क्रमणे नियन्त्रणेन सह प्रदेशसर्वकारेण स्वास्थसुविधासु विस्तारः क्रियते । चिकित्सामहाविद्यालयस्य, प्राणवायुसंयन्त्रणस्य स्थापनया सह तृतीयलहर्याः रक्षणाय चिकित्सकीयव्यवस्थाः तीव्रतया उत्तमाः कृताः। प्रदेशस्य सीएचसी–पीएचसी–इत्यनयोः शय्यानां विस्तारः क्रियते । उत्तरप्रदेशसर्वकारेण सङ्क्रमणात् रक्षणाय अनेकासु स्थितेषु कार्यकरणम् आरब्धम् । यस्यान्तर्गतं तीव्रतया प्रदेशस्य ग्रामीणक्षेत्रेषु नगरीयक्षेत्रेषु च शय्यानां सङ्ख्यायां वर्धनेन सह तीव्रतया प्राणवायुसंयन्त्रणं क्रियाशीलं क्रियते। प्रदेशे 554सङ्ख्यकेषु प्राणवायुसंयन्त्रेषु 450सङ्ख्येकानि संयन्त्राणी क्रियाशीलानि कृतानि । एतेषां प्राणवायुसंयन्त्राणां क्रियाशीलेन भविष्ये उत्तरप्रदेशे प्राणवायोः न्यूनता न भविष्यति। अनेन साकमेव स्थानीयस्तरे रोगिभ्यः चिकित्सा प्राप्तुं शक्येत् तदर्थं प्री-फैब्रिकेटेडविभागाः निर्मातुं निर्णयः स्वीकृतः ।

## नूतन तकनीक्या सिद्धाः करिष्यन्ते नूतन विभागाः

उत्तर प्रदेशस्य सीएचसी-पीएचसी–इत्यनयोः शय्यानां विस्तारः क्रियते तत्रैव, समयेन सह विभागः सिद्धं कर्तुं सीमेन्ट-मौरङ्ग–इष्टिकानां निर्माणात् पृथक् नूतनतकनीक्या कार्यं कर्तुं योजना कृता । अस्य विकल्पं उद्दिश्य 'प्री-फैब'–विभागस्य प्रस्तावः निर्मित। चिकित्सा स्वास्थ्य महानिदेशकस्य डॉ. वेदव्रत सिंहस्य अनुसारं प्री-फैब–विभागे सुरक्षायाः पूर्णसंरक्षणं स्थापयिष्यते । एषः इस्पातसंरचनया निर्मास्यते ।

## स्वास्थ्य विभागस्य चिकित्सालयेषु वर्धयिष्यतेशय्यानां स्थितिः

स्वास्थ्य विभागानुसारं प्रदेशे 3602 सङ्ख्यकानि प्राथमिक स्वास्थ्य केन्द्राणि (पीएचसी) सन्ति । येषु 14,408 सङ्ख्याकाः शय्याः सन्ति । तत्रैव 943सङ्ख्यकानि सामुदायिक स्वास्थ्य केन्द्रेषु (सीएचसी) 28,290 सङ्ख्यकाः शय्याः सन्ति । स्वास्थ्य विभागस्य चिकित्सालयेषु कोविड सङ्क्रमणाय शय्यानां स्थितिं वर्धयित्वा सप्तति सहस्राधिकं कर्तुं लक्ष्यं निर्धारितम्।




एतादृश्यां स्थित्यां येषां सीएचसी-पीएचसी–इत्येषु विस्तारस्य स्थानम् अस्ति, तेषु प्री–फैब–विभागाः निर्मास्यन्ते । विभागपक्षतः सीएचसी-पीएचसी–इत्येषु अनुमानितः नवदश सहस्रं शय्याः वर्धयितुं सिद्धता अस्ति ।

## अफगानस्य नागरिकान् संरक्षितुं विश्ववराष्ट्राणाम् उत्तरदायित्वम् अस्ति - यू एन् सभायां- नरेन्द्र मोदी



**न्यूयार्क।** संयुक्त राष्ट्र सभायां भाषमाणा वसरे भारतस्य प्रधानमन्त्री नरेन्द्र मोदी अवदत् यत् अफगानस्य नागरिकान् संरक्षितुं विश्ववराष्ट्राणाम् उत्तरदायित्वम् अस्ति इति। केचित् राष्ट्राः अदङ्कवादाः आयुध रूपेण स्वीकृताः सन्ति, आविश्वम् आतङ्कवाद प्रवर्तनानि व्याप्यमानानि सन्ति इति सः अवदत्। पाकिस्थान मधिकृत्य परोक्ष रूपेण विमर्शनं कृत्वा तेन उक्तं यत् अफ्गानिस्थानं स्वार्थ लाभाय उपयोक्तुम् यस्यकस्यापि अधिकारः नास्ति। अफगनस्य नागरिकाः विश्वराष्ट्रेण संरक्षितव्याः इत्यपि तेनोक्तम्। कोविड् बाधया मृतेभ्यः श्रद्धाञ्जलयः समर्प्य 20 निमेषपर्यन्तं सः अभाषयत्।

## सीमनि चीनेन ग्रामं निर्मितम्, लोलुप जीवनेन भारतीयान् प्रलोभयितुं प्रयतते

**गान्धीनगरम्।** भारत चीनयोः सीमनि 680 कुटीरयुक्तं ग्रामं चीनेन निर्मितम् इति सूचना। अन्ताराष्ट्रिय आतङ्कवादविरुद्धसमित्या एव घटनेयं प्रतिवेदिता। तस्मिन् ग्रामस्थाः नागरिकाः भारतीयान् प्रलोभयित्वा स्ववशं कर्तुं यतते इत्यपि प्रतिवेद्यते। एतत् चीनस्य दक्षविभागस्य प्रवर्तनं भवति। तैः भारतीयाः भारतविरुद्धाः क्रियन्ते। एतादृशप्रवर्तनानि निरोद्धुं आरक्षकेभ्यः परिशीलनं ददाति इति अन्ताराष्ट्रिय आतङ्कवादविरुद्धसमित्याः निर्वाहकसमित्यङ्गेन कृष्णवर्मणा निगदितम्।

## सम्पादकीयम्

# सर्पाः पर्यावरणस्य अभिन्नानि अंगानि

अद्य सम्पूर्ण मानव जातिः स्वास्थ्याय आकुला अस्ति। परंच स्वास्थ्यं एकं महत् आकुलनस्य विषयः। इदम् प्रबोधितुं न शक्यते। यतः केवलं रोगराहित्यमेव स्वास्थ्यं न कथ्यते। यावत् पर्यन्तं शरीरस्य सम्पूर्ण संयंत्रं एकस्मिन् सुरे लये वा न मन्दगानं करोति तावत् पर्यन्तं स्वास्थ्यस्य अनुभव कर्त्तुं न शक्यते। अयमेव सन्देशः विश्व स्वास्थ्य संगठनस्य प्रतीके चित्रितं क्रियतेस्म। अस्य प्रतीकं अतीवं अर्थपूर्णं। जागतिकं स्वास्थ्यस्य रक्षायै 1948 ईसवीये इदम् संगठनं निर्मितं। प्रतीके पृथिव्याः वर्तुलं अस्ति यस्य उभयतः वनस्पतेः शाखाः सन्ति। अस्य वर्तुलस्य केन्द्रे एका यष्टिरस्ति। यस्मिन् एकः सर्पः आलिंगितः। इदमं एकं यूनानी प्रतीकमस्ति। यूनाने अपोलो नामकः स्वास्थ्यस्य देवता आसीत्। ऐसलेपियसः तस्य पुत्रः आसीत् यः स्वयं वैद्यः आसीत्। इयं यष्टिः तस्य साधनं अस्ति। यतः यूनाने सर्पं पवित्रं मन्यतेस्म मान्यता चासीत् यत् तस्मिन् रोगोपचारकाः शक्तयः विद्यन्ते, विशेषतः सः निर्मीकं विसर्जनस्य कलादक्षः अस्ति यत् कायाकल्पस्य प्रतीकं अस्ति। स्पष्टमिदं यत् यदा विश्वस्वास्थ्य संगठनस्य स्थापना अभवत् तदा अस्मिन् यूरोपस्य नेतारः अधिसंख्यकाः आसन् अनेनैव कारणेन ने यूनानी मिथकं चितवन्तः। यूनाने प्रत्येकायै वार्तायै देवता भवन्तिस्म यथा भारतेऽपि भवतिस्म। इदानीं स्वास्थ्यस्य देवता सर्पं आलिंगितम् अर्थात् रोगणस्य शक्तिं आत्मसात् चकार। आधुनिकाः जनाः भयेन सर्पाणां पार्श्वे न गच्छन्ति। परंच सर्वे सर्पाः विषयुक्ताः न भवन्ति, अपितु ते सर्पाः पर्यावरणस्य अभिन्नानि अंगानि सन्ति। कीदृशं आसीत् तद् जगत् यदा वयं सर्वेषां प्राणीनां प्राकृतिकां च सम्पदां समादृयन्तेस्म। सम्भाव्यते अनेन सौहार्द्रेण स्वास्थ्यस्य स्तरं उच्चमासीत्।

# 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेद माथर्वणं चतुर्थ मितिहास पुराणं पञ्चमम्...'

साम्प्रतं शोधपत्रस्य प्रस्तावितो विषयः वामनपुराणे अद्वैतचिन्तनम् । भारतीय परम्परायां मोक्षमार्गस्य गुरुत्वमतुलनीयम्, तत्र अद्वैतचिन्तनं खलु अन्यतम पन्था । वैदिक शास्त्रादारभ्य दर्शनसाहित्येषु अद्वैतचिन्तनस्य विविधानि तत्त्वानि विश्लेषितानि । अद्वैत मार्गस्य मूलप्रतिपादितविषयः 'ब्रह्म सत्यं जगन्मिथ्या, जीवब्रह्मैव नापरः।' अपि च ब्रह्म निर्गुणं निर्विकल्पकं सर्वव्यापकं सच्चिदानन्द स्वरूपञ्चेति। लौकिक धाराप्रवाहे पुराण साहित्यानां सृष्टिः जाता। ब्रह्माविष्णुमहेश्वर-इत्याख्यानां देवतानां प्राधान्येन पुराणानि रचितानि। तत्र प्रपञ्चोऽपि सद्रुपेण स्वीकृतः। परन्तु तत्र अद्वैतचिन्तनस्य प्रभावः परिलक्ष्यते। आख्यानसूत्रानुसारेण विविधतया अद्वैतभावनायाः प्रसङ्गः पुराणग्रन्थेषु चर्चितः। अत्र ब्रह्म सगुणत्वेन वर्णितः। अस्मिन् सगुण ब्रह्मप्राधान्यपुराणेषु निर्गुणब्रह्मप्रतिपादकानि अद्वैततत्त्वान्यपि च जीवानां सत्यत्व प्रतिपादक पुराणेषु ब्रह्म सत्यं जगन्मिथ्येति अद्वैतध्वनिः कथं प्रतिफलति, तदेवास्य शोधपत्रस्य निरूपणीय विषयः। मुख्यशब्दाः : वामन पुराणम्, ब्रह्म, अद्वैततत्त्वम्, प्रपञ्चः, वेदान्तम्, जगद्योनि इत्यादयः। उपोद्घातः



प्रीयाद्धरिर्हरोऽनेन ब्रह्मानन्देन सर्वदा। पायाच्च प्राणिनः सर्वान् स्वाश्रितान् शुद्धमानसान्। भारतीयशास्त्रपरम्परायां प्राचीनभारतीयसंस्कृतेः स्वरूपवर्णितेषु प्रमुखशास्त्रेषु पुराणमत्यन्तं गुरूत्वपूर्णम्। तदानीन्तन आध्यात्मिक-सामाजिक परिस्थितिनां कश्चित् शास्त्रसमुहः एव पुराणम् । कृष्णद्वैपायनवेदव्यासेन रचितमिदं पुराणशास्त्रम् । 'पुरा भवमिति' पुराणमित्य स्मिन्नर्थसंयोगेन प्रधानतया द्वैतशास्त्र त्वेन भजते शास्त्रमिदम्। 'पुरा नवं भवति' इत्यप्यवोचत् याष्काचार्यः। प्राचीन समये पुराणं द्विविधात्मकमिति वर्णितम् , तत्र प्रथमं तावत् प्राचीनवृत्तविषयकानां विद्या स्वरूपम्, अपरं तु विशिष्टसाहित्येषु प्रयुक्तमान मुपलब्धिस्वरूपम् । वस्तुतः अस्मिन् पुराण शास्त्रे विविधदेवतानां तद्गतावतारांशानां च वर्णनं दृश्यते । मूलमहापुराणानि वैष्णव धर्मात्मक भक्तिविशिष्टत्वेन द्वैतसत्तात्मकेन विद्यमानानि भवन्ति । यद्यपि प्राचीन कालीन घटनानां नवरूपेणावलोकनमेव पुराणमिति व्युत्पत्तिदृष्टया ज्ञायते, तथापि भारतीय-परम्परानामाध्यात्मिकचेतनया विष्णुप्रभृतिनां देवानां गुणकीर्तनमेव पुराणेषु परिलक्ष्यते । तत्र पुराणविषये श्रुतौ उक्तमस्ति - 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थ मितिहास पुराणं पञ्चमम्...।'अर्थात् पुराणं प्राचीनविषयानां संस्कृतिनामाधारग्रन्थः पञ्चम वेदो वा। शास्त्रेऽपि पुराणलक्षणं यथा - सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् एवञ्च पुराणसाहित्यं तस्येतिहासश्च पर्यालोचन नन्तर मिदं निश्चयेन वक्तुं शक्यो यत् इदं पुराणं प्राचीनराजवंशानां तद्गत राज्ञामाधारित चरित्रवंशेतिहासानामाकरग्रन्थः इति। अन्यत्र पुराणं द्वैतशास्त्रमिति द्वैताश्रयिनां मतम्।

# 'महद् ऋग्वेदादेः शास्त्रस्य अनेक विद्यास्थानो पबृंहितस्य प्रदीप वत्सर्वार्थावद्योतिनः सर्वज्ञ कल्पस्य योनिः कारणं ब्रह्मेति'

**1. विष्णुपुराणे मैत्रेयसंवादे अद्वैतप्रसङ्गः आयाति ।**
**2. अग्निपुराणे जीवन्मुक्तिस्वरूपं वर्णितं दृश्यते ।**

एतेषां महापुराणानां प्राप्ततत्त्वविश्लेषणेन प्रश्नो उदेति यत् द्वैतशास्त्रात्मके अस्मिन्पुराणसाहित्ये अद्वैततत्त्वस्यापि प्रासङ्गिकत्वं दृश्यते न वा? अथवा द्वैतशास्त्रत्वेनाभिधीयमाने पुराणसाहित्ये किमद्वैततत्त्वस्य सामञ्जस्यमस्ति न वेति? एवंविधप्रश्नानां समुत्तरप्राप्तये विष्णुपुराणस्य एकस्य प्रमुखांशस्य विश्लेषणमेवास्य शोधपत्रस्य अन्वेष्टुकामो विषयः ।
शिवविष्णोः वर्णनात्मकं वामनपुराणमपि उत्कृष्टमेकं महापुराणम्। तत्राप्यात्मज्ञानस्य माहात्म्यं कीर्तितम्। वस्तुतः पुराणवेदान्तयोः उभयोः दार्शनिकतत्त्वपर्यालोचनेन श्रद्धाभक्तिसमर्पणादिनां स्थानमतीव गौरवपुर्णं महत्त्वपूर्णञ्चेति प्राप्यते। परन्तु द्वैतमतावलम्बिनः भक्तिविषयान्तर्गतभक्तभगवतयोः उभयोः सत्यत्वं स्वीकुर्वन्ति, अद्वैतिनः केवलं ब्रह्मणः सत्यत्वे सति इतरमिथ्यात्वं प्रमाणयति। द्वैतिनः पुराणस्य ज्ञानेऽपि द्वैतसत्ताकत्वमारोपयितुं यतन्ते, परन्तु शास्त्रान्यपि सामुहिकतया वेदान्तवर्णितः ब्रह्मज्ञानस्यैव प्राधान्यं भजते। तेनैव रीत्या अत्रापि वामनपुराणे आत्मज्ञानस्य माहात्म्यप्रकटनाय कथयति। ऐदम्प्राथम्येन वामनपुराणमद्वैततत्त्वयोः विषयः विश्लिष्यते। वामनपुराणम् श्रीहरेः वामनावतारसम्बन्धितं वामनपुराणमिदम्।
पञ्चदशाध्यायात्मकेऽस्मिन् पुराणे दशसहस्र श्लोकाः विद्यन्ते। विष्णुपरकेऽस्मिन् पुराणे विष्णोः विविधांशानां वर्णनेन सह भगवतः शिवस्यापि माहात्म्यं प्रकीर्तितम्। विशेषतः शैवतीर्थ-उमाशिवविवाह-गणेशावतरणकार्तिकेयचरितान्यादीनि वर्णितानि। वस्तुतः ऋग्वेदस्य प्रथममण्डलान्तगत-विष्णुसूक्तात् बहूनि मन्त्राणि संकेतितानि। वामन-शब्दस्य विष्णुत्वेन प्रयोगः शतपथब्राह्मणे प्राप्यते; वामनो ह विष्णुरास। अपि च विष्णुसूक्ते गोपालकृष्णस्य उक्तम् - त्रीनि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः।
अतो धर्माण धारयन् । वामनावतारे पदत्रयेण भूवनत्रयमापनमिति विशेषांशः अत्र वर्णितोऽस्ति । अद्वैततत्त्वम् वस्तुतः द्वैतात्मके विष्णुपुराणे अद्वैतस्यापि प्रासङ्गिकत्वसंशये ऐदंप्राथम्येन ज्ञातव्यं किं नाम अद्वैतम्? इति चेत् उच्यते - अद्वैतं नाम न विद्यते



द्वितीयमिति द्वितीयस्य निषेधपुर्वकात् अद्वितीयम्, तस्य भावः अद्वैतम्। ब्रह्म सत्यं जगन्मिथ्या जीवब्रह्मैव नापरः, परमानन्दस्वरूपं ब्रह्मैव सद्वस्तुः , इतरजगत्रपञ्चादयः असदिति हेतोः अवस्तुः इति। अर्थात् जगत्रपञ्चं असदिति मत्वा परमानन्दस्वरूपब्रह्मणः ध्यानं जीवब्रह्मणः वेदान्तदर्शनस्य प्रस्थानत्रयीषु ब्रह्मसूत्रे 'जन्माद्यस्य यतः' इत्यस्मिन्नधिकरणे सम्पूर्णस्यास्य जगतः कारणं ब्रह्मैव इति सिद्धान्तः कृतः। सूत्रस्य व्याख्यां करोति यत् जन्मादि अस्येति जन्माद्यस्य, जन्म-स्थिति-लयेषु जन्म आद्यशब्दः इत्यर्थः। 'यत' इति कारणनिर्देशः। अर्थात् जन्म-स्थिति-लय-विशिष्टजगत्रपञ्चानां मूलकारणत्वं प्रकाशितम्। तथा च जगत्रपञ्चादयेभ्यः आरभ्य दृश्यमानस्य सर्वस्य मूलकारणत्वं हेतुत्वं वा ब्रह्मणि सम्भाव्यते। उक्तञ्च श्रुतौ - 'यतो वा इमानि भूतानि जायन्ते'... इति। तथा हि ब्रह्मसूत्रशङ्करभाष्ये भाष्यकारैः उक्तम् - 'एतस्मादात्मनः या उत्पत्तिर्ब्रह्मणः कारणात्, तत्रैव स्थितिः प्रलयश्च, ते गृह्यन्ते।' अपि च जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, तदेव दृढयन्नाह - 'शास्त्रयोनित्वात्' इति। सूत्रेऽस्मिन्नपि ब्रह्मणः जगत्कारणत्वविषये चर्चितम्। भाष्यकारैः अस्मिन् सूत्रप्रसङ्गे उक्तम् - 'महद् ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्मेति।' अतः ब्रह्म जगत्कारणत्वे सति जगद्योनिस्वरूपम्। श्रुतिप्रमाणं यथा - 'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः ...' अन्यत्र तदेव ब्रह्म स्वयम् अयोनिः अर्थात् तदेव पूर्वमाद्यं हिरण्यगर्भस्वरूपम्। चराचरविश्वस्य निदानं ब्रह्मैव।



'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः ...' अन्यत्र तदेव ब्रह्म स्वयम् अयोनिः अर्थात् तदेव पूर्वमाद्यं हिरण्य गर्भ स्वरूपम् चराचरविश्वस्य निदानं ब्रह्मैव।



# पत्ररूपेण विरचितत्वादत्र सत्काव्य-नाटकमौचित्यप्रभृतयः



रोमनसाहित्ये होरेसमहोदयस्य वैशिष्ट्यं स्थानञ्चानुपममिति प्राच्यपाश्चात्त्यविदुषामभिमतम्। पाश्चात्त्यकविषु वर्जिलमहोदयानन्तरं तस्यैव नाम सविशेषेण समाद्रियते। तस्य साहित्यसमीक्षासंबद्धविचारेषु यूनानीकाव्यशास्त्रस्य विशेषतो अरस्तूमहोदयस्य काव्यशास्त्रीयचिन्तनस्य महत्प्रभावः परिलक्ष्यते, तथापि तद्विरचितो ग्रन्थः 'आर्स पोएतिका' यो हिन्दीभाषायां काव्यकला इति नाम्ना अनूदितः, स ग्रन्थो रोमनकाव्यशास्त्रस्य सर्वाधिको महत्त्वपूर्णो ग्रन्थः स्वीक्रियते, मन्यते च। होरेसमहोदयो मुख्यतः कवि आसीत् परं तद्विरचिताः व्यङ्ग्यपरकनिबन्धः काव्यशास्त्रसंबद्धविचाराश्च महत्त्वपूर्णाः मन्यन्ते। साहित्यजगति काव्यपत्ररूपेणैव विरचितः 'आर्स-पोएतिका' तस्य प्रसिद्धो ग्रन्थः। पत्ररूपेण विरचितत्वादत्र सत्काव्य-नाटकमौचित्यप्रभृतयः काव्यशास्त्रसंबद्धा गभीरविषया अपि अत्यन्तं सरलरीत्या निरूपिताः सन्तीति ग्रन्थस्यास्य वैशिष्ट्यम्। ग्रन्थेऽस्मिन् यद्यपि आलोचक-चिन्तकयोः विश्लेषणं सूक्ष्मविवेचनञ्च न प्राप्यते परं काव्यशास्त्रपरकं व्यावहारिकं ज्ञानं प्रचुररूपेण सविशेषेण च प्राप्यते। तच्च ज्ञानं सम्यक्रूपेण सूक्तिभिः सारपूर्ण-वाक्यखण्डेन वाक्यशैल्या च प्रस्तौत। यद्यपि सिद्धान्तदृष्ट्या ग्रन्थोऽयं काव्यशास्त्रक्षेत्रे न किमपि विशिष्टं योगदानं प्रददाति न चालोचकैः ग्रन्थोऽयं बहुधा प्रशंसितः, तथाप्यत्रा प्रतिपादिताः काव्यशास्त्रसंबद्धविचाराः सर्वथा समाद्रियन्ते। ऐतिहासिकदृष्टयाऽपि ग्रन्थोऽयं महत्त्वपूर्णं स्थानं विभर्ति पाश्चात्यकाव्यशास्त्रे। वस्तुतः तदानीन्तने युगे काव्यकलायाः अत्यन्तं ह्रासो जातः। तदानीन्तनाः कवयः कला-नियमेभ्योऽनभिज्ञा आसन्, अत एव निम्नश्रेण्या आदर्शानामनुकरणं कुर्वन्त आसन्। अतः तदानीन्तनस्य साहित्यस्य परिष्कार एव ध्येय आसीत् होरेसमहोदयस्य। होरेसमहोदयस्य विचारेषु अरस्तूमहोदयस्य प्रभावः संलक्ष्यते। काव्यस्य किं स्वरूपम्? तस्य प्रकृतिः कीदृशी भवेत्? इत्यादिषु पक्षेषु होरेसमहोदयस्य यच्चिन्तनं वर्तते, याश्च स्थापनाः तेन स्थापिताः, तत्र अरस्तूमहोदयस्य प्रभावः स्पष्टरूपेण परिलक्ष्यते। अर्थात् होरेसमहोदयस्य साहित्यिकं चिन्तनम् अरस्तूमहोदयस्य काव्यशास्त्रीयविचारेण सह संपृक्तं दृश्यते।

## अमृतवाणी



**शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )**




गीतामृतरसायनम्तमुवाच हृषीकेषः
प्रहसन्निव भारत। सेनयोरुभयोर्मध्ये
बिषीदन्तमिदं वचः।

**संस्कृतभाष्यम्** - अर्जुनं शोकसन्तप्तं दृष्ट्वा तं मधुसूदनः। उवाच मधुरा वाणी तद्वचः श्रृणु भारत। शरणागतस्यार्जुनस्य वचः श्रुत्वा भक्तवत्सलः भगवान् श्रीकृष्णः ज्ञातवानासीत् यत् अर्जुनस्य कौटुम्बि कादिकं प्रति यः करुणाजन्यमोहः वर्तते तस्मात् मोहात् सःभयभीतत्रस्ति यत् एतेषां सम्बन्धितजनानां मदीयस्वार्थवशादेव वधःनोचितः वधजन्याधर्म भयात् सः युद्धं कर्तुं न इच्छति। सम्प्रति अर्जुने इदं ज्ञानं नास्ति यत् कस्मात् कर्मणः पापं कस्मात् कर्मणः पुण्यञ्च प्रजायते। आत्मनः स्वरूपस्य ज्ञानाभावात्वात् स्वक्षात्रधर्ममपि न जानाति। यदि अर्जुनस्य हृदि इदं ज्ञानं भवेच्चेत्तर्हि युद्धा-परित्यागोत्रपि न भवेत्। एतदर्थं भगवता श्रीकृष्णेन विचार्य्यते यत् अर्जुनस्य कृते आत्मस्वरूपज्ञानं परमावश्यकम्। आत्म स्वरूप ज्ञानं विना कौटुम्बिकमोहस्य नाशः न भविष्यति इत्यभिप्रायः। इत्थं विचिन्त्य सर्वेन्द्रियनियन्ता भगवान् हृषीकेशःतमुभयोः सेनयोर्मध्ये युद्धार्थं विषीदन्तं विषादं कुर्वन्तमर्जुनं प्रहसन्निव इदं वक्ष्यमाणं रससिक्तं वच उवाचेत्यन्वयः।

अन्वयशब्दार्थः- भारतहे भरतवंश में श्रेष्ठ धृतराष्ट्र!, हृषिकेशः भगवान् श्रीकृष्ण ने, प्रहसन परिहास करते हुए, इवसा (तरह), उभयोः दोनो,सेनयोः सेनाओं के, मध्ये बीच में, विषीदन्तम शोक में डूबते हुए, तम् अर्जुन के प्रति, इदम् आगे कहे जाने वाले, वचः वचन, उवाच कहा।

**तत्वार्थः-** सन्दर्भः गीता हे भरतवंश में श्रेष्ठ धृतराष्ट्र! भगवान् श्रीकृष्णने दोनों सेनाओं के मध्य शोक में डूबते हुए अर्जुन का परिहास करता हुआ सा यह वचन कहा।

रहस्यात्मक- तथ्य - लीलापुरुषोतम भगवान् की माया इतनी बलवती है कि बड़े-बड़े ज्ञीनी,योगर्षि-महर्षि, इन्द्र से ब्रह्मा पर्यन्त देवगण आदि भी इनकी माया का पार पाने में असमर्थ रहे हैं ,तो अर्जुन की कौन कहे। अर्जुन युद्ध क्षेत्र में पहले दुर्योधन आदि कौरव पक्षीय सेनाओं को कोशते थे कि इन्हें इतना भी ज्ञान नहीं है कि थोड़े से राज्यसुख के लिए अपने सगे सम्बन्धियों के विरुद्ध युद्ध की घोषणा कर दी।आज वही अर्जुन उन्हीं कुटुम्बियों की ममता में बँधकर युद्धक्षेत्र में अपने क्षात्र धर्म का परित्याग कर' मैं युद्ध नहीं करूँगा' इसकी विधिवत घोषणा कर चुपचाप शान्त होकर बैठ जाता है यह कैसी प्रभु की लीला है। आज भगवान् अर्जुन के इसी स्वभाव को देखकर उसका परिहास कर रहे हैं ।भगवान् अपनी हँसी में अर्जुन को यह संकेत देना चाहते हैं कि अर्जुन तुम अपने स्वरूप को भी भूल गये।उठो आत्मस्वरूप का बोध करो तभी तुम अपने क्षात्र धर्म को समझ पाओगे। शरणागत अर्जुन की बात सुनकर भगवान् श्रीकृष्ण को उसपर दया आ गयी कि अर्जुन को कौटु-म्बकमोह के कारण इतना भी ज्ञान नहीं है कि किस कर्म करने से पाप और किस कर्म के करने पुण्य होता है। इसे आत्मस्वरूप का ज्ञान नहीं रहने के कारण धर्म औरअधर्म की यथार्थ परिभाषा का ज्ञान भी नहीं है। इसलिए सर्व प्रथम इसे आत्मा,शरीर और स्वकर्त्तव्य का बोध कराना परम आवश्यक है।

## निर्मलबुद्धिः साधिका



**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**



हरिभक्तो न सीदति।।
गीताज्ञानं सर्वतः भद्राय जीवानां प्रवर्तते। ।
गीताज्ञानसारः परमात्मनः एव सर्वसम्बन्धो भवेत्।
सम्बन्धस्तु मनसा बुद्ध्या चैव भवति।।
यत्र मनो गच्छति यत्र बुद्धिश्च गच्छति तत्रैव सम्बन्धो भवति। आत्मनः सम्बन्धः।।
संसारस्य सम्बन्ध एव सर्वदुर्गुणाश्रयः। संसारस्य सम्बन्धसंचारेण संसाररक्षणाय यतमानः व्यापृतः जनः दृश्यते। संसारासक्तः अस्तु कश्चिद् वाह्यवेशभूषयापि विरक्तः परं यदा तस्य सांसारिक-रागः न नष्टः तावत् वेशोऽपि वंचक एव।
अत आह महाभारते वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
केवलं गृहत्यागेनापि रागस्य सत्वेन वनेऽपि वा कस्मिञ्चित् तीर्थेऽपि सांसारिकाः दोषाः तत्रापि भवन्त्येव।
यदा गृहेऽपि पञ्चेन्द्रियनिग्रहः तदा गृहमपि वनं तीर्थञ्चापि। निर्मलं मन एव सर्वोत्तमं तीर्थम्।।
अतः गीतायां मनसः एव सुधाराय सर्वः यत्नः विहितः। एतदर्थं हरिणा सहैव सम्बन्धो भवेत्। यदि हरिणा सह सम्बन्धः तर्हि न तत्रावसादः न तत्राहंकारः, न तत्र दलबन्धनं ।

**॥ विमलः हिन्दी भावानुवादः॥**

आध्यात्मिक ज्ञान संचार में परम पिता परब्रह्म परमेश्वर के साथ ही सर्व सम्बन्ध का संचार होगा। इस सम्बन्ध को रखने वाला ही यथार्थ भक्त होगा। ऐसे भक्तों केलिए सांसारिक कोई भी प्रतिकूलता होती ही नहीं। भक्त प्रह्लाद अग्नि में बैठकर पिता को सहर्ष कह रहा है' रामनामजपतां कुतो भयम'।राम नाम जपने वालों को कहीं से भय नहीं।

ऊपर से आत्मकल्याण का प्रचार प्रसार हो ,वाह्यस्वरूप भी धार्मिक हो भीतर सांसारिक मोह का संचार हो तो वहां ही हत्या, हिंसा, शोषण, दमन,वंचन,अन्याय, असंवैधानिक दुर्व्यवहार का पूर्णतः संचरण होगा। पूर्व में भी आज तो और भी प्रत्यक्ष दैनिक अत्यन्त निन्दनीय दुर्व्यवहारों को देखकर निश्चित अवधारण कर लें कि वेश कभी भी धर्म का निर्धारण नहीं कर सकता है। यथा रामचरितमानस में कि एहुं कुबेषु साधु सनमानू।।
जिमि जग जामवंत हनुमानू।।

भौतिक सत्ता में कभी भी अध्यात्म का वास नहीं होगा। जहां भौतिक सत्ता का संचार है वहाँ अहंकार अग्रसर निश्चित होगा। अत्यन्त अन्तिम दुःखद आश्चर्य है कि गुरु शिष्य में दलबन्धन हो। परस्पर हिंसा ,भय का संचार हो। हत्या तक हो जाय। एक बाहर से पूर्णतः विरागी सन्त की हत्या किसी भी परिस्थिति में हो इसका स्पष्ट सीधा अर्थ है कि हरि से भीतर से मन का सम्बन्ध नहीं था। अतः हरि से सम्पूर्ण सम्बन्ध होना ही यथार्थ अध्यात्म है। अतः गीताज्ञान से ही सम्बन्ध बनाकर घर में हरिनाम का आश्रय लेकर मानव जीवन को सार्थक करें



**महन्तस्य आत्महत्या**

# आचारहीनं न पुनन्तिदेवाः

**प्रेरणा**

**प्रयागराजः।** आचारहीनं न पुनन्तिदेवाः इयमुक्तिः देववाण्याः प्रसिद्धा उक्तिः विद्यते। अस्याः उत्त्याः तात्पर्यमस्ति यत् ये जनाः आचारहीनाः सन्तितान् जनान् वेदाः अपिपवित्रं न कर्त्तुंपारयन्ति।वेदः अपौरूषेय ग्रन्थः अस्ति। ईश्वरात् वेदानां मंत्राणि निसर्गतानि सन्ति। इमेग्रन्थाः एव सनातनधर्मस्य पवित्रताः ग्रन्थाः सन्ति। तेअपि आचारहीन जनान् पवित्रं कर्त्तुं न सक्षमं भवन्ति। आचारहीन जनानां समाजे कुत्रापि प्रतिष्ठा न भवति। आचारः किम् इति विचारणीयः प्रश्नः।आचार शब्दस्य सामान्यः अर्थोभवति आचरणम्। अन्यैः जनैः सहव्यवहा-रः अन्योन्याश्रितपरय व्यवहारः अपिआचरस्य अन्तर्गते परिगण्यते। स्वयं क्रियमानं प्रतिदिनं कर्मअपि आचारः। मानवानां आन्तरिक- बाह्य चरित्रस्य प्रभावः आचरणे सर्वाधिकं दृश्यते। उत्तम चरित्रं जनानांसर्वोत्तमं धनंमन्यते। यदि-मानवानां पार्श्वेसर्वाणि धनानिस्युः परन्तुतस्य पार्श्वे आदर्श चरित्रं न स्यात् तदातस्य जीवनं व्यर्थंमन्यते।

आदर्श चरित्रस्य निर्माणं कथं भवति अस्य सम्बन्धे बौद्ध दर्शनेवर्णितम्-विचारैः कर्मणः उत्पत्तिः भवति, कर्मणः अभ्यासस्य उत्पत्तिः संजायते। अभ्यासात् चरित्रस्य उत्पत्तिः भवति। अतः मानवैः मनसि सु-चिन्तनम् अवश्यमेव करणीयम्। मनसि उत्पन्नस्य विचारस्य प्रभावः अस्माकं चरित्र निर्माण निश्चित रूपेण भवति। चरित्र निर्माणे संगत्याः प्रभावः सर्वाधिकं दृश्यते। अतः अस्माभिः सत्संगत्यां स्थातव्यम्। सत्साहित्यस्य अध्ययनस्य प्रभावः अपिचरित्रनिर्माणे दृश्यते। आदर्श चरित्रैः एव वयंप्रतिष्ठां प्राप्नुमः। जीवने व्यवहारैः मधुर सम्भाषणेन स्वच्छतायाः अवलम्बलेन आध्यात्मिक चिन्तनेन सर्वत्र आनन्देन सह सफलतां प्राप्नुवन्तिजनाः। आचारस्य प्रमुख तत्वंचरित्रमेव। अतः चरित्रस्य रक्षा अस्माभिः सावधानतया कर्त्तव्या।

**-डॉ भक्तिनाथ झा**
**बिहार**



# 85 किग्रा इति भारं आलम्ब्य दृश्यं पुनरावृत्तः

महन्तस्य नरेन्द्रगिरेः मृत्योः (हत्यायाः) कुचक्र कर्तॄन् दोषी जनान् उद्घाटयितुं सीबीआई आनन्द गिरिं, आद्या तिवारीं, सन्दीप तिवारीं च 10 दिवसानां सुरक्षापूर्ण परि-वीक्षायै (कस्टडी रिमाण्ड) यााचितवती

**प्रयागराजः। वार्ताहरः।** महन्तस्य नरेन्द्रगिरेः मृत्योः (हत्यायाः) कुचक्रकर्तॄन् दोषीजनान् उद्घाटयितुं सीबीआई आनन्दगिरिं, आद्यातिवारीं, सन्दीपतिवारीं च 10 दिव-सानां सुरक्षापूर्ण परिवीक्षायै (कस्टडी रिमाण्ड) यााचितवती। अस्याः परिवीक्षानन्तरे सीबीआई परीक्षणे केचित् नवजनाः आगन्तुं शक्यन्ते। येषांविरूद्धे अद्यावधिं एसआईटी कश्चित् रहस्योद्घाटनं नैवकृतम्। सीबीआई दलं सुदूरात् समागतैः सन्तैः पृच्छा कृतम। मठे द्वादश संख्याधिकाः छायायन्त्राणि निष्क्रियाः सन्ति। न्यायाधीशस्य अनुमत्या सीबीआई अतिथि कक्षस्य मुद्रांकनं अत्रोटयत्। आत्महत्या (उद्बन्धानन्तरं) इत्यस्य घटनाक्रमं शिष्यैः सह-पुनः क्रियान्वितं चकार। अखिल भारतीय अखाड़ा परिषदः अध्यक्ष पदे अभियोगिनः प्रयत्नशीलाः। 85 किग्रा इति भारं आलम्ब्य दृश्यं पुनरावृत्तः। 9 सदस्यीयंदलंबन्धेस्थितेहनुमानमन्दिरेप्रापितं। अतिथि गृहस्यानन्तरे महन्तस्य नरेन्द्र गिरेः कक्षमपि मुद्रांकितम्। पैनकार्ड, आत्महत्या पत्रेण सह हस्ताक्षरस्य मेलन परीक्षणं जातम्।




छायाकारः सौरभ कुमार

# महाकविः सारलादासः

सारलादास उत्कलभूमौ शूद्रमुनिनाम्ना परिचितः । उत्कलव्यास इति तं केचन उद्घोषयन्ति। अस्य महात्मनः कृतिषु हि अस्य वंश-परंपरा-विषये किमपि लिखितमस्ति। तथ्यदृष्ट्या सारलादासः पञ्चदश-शताब्दीय इति तत्कृत-महाभारत परिशीलनेन परिज्ञायते। कपिलेन्द्रदेवस्य राजनि सारलादास आसीदिति तेन भणितम्। तथाहि-

'जमेश्वर लिंग तहिं महोदधि तटे। नीलसुन्दर पर्वत श्रीकलप बटे विजये रामकृष्ण सुभद्रा महा ब्रह्म। चारिलक्ष वतिश सस्राब्द महातम कलिकाल ध्वंसन कु भोगगोटि पूजा। प्रणमिते खटइ कपिलेश्वर राजा ' इत्यत्र कपिलेन्द्रदेवस्य अस्तित्वं स्पष्टतया स्थिरीक्रियते।

सिद्धेश्वर अस्य पूर्वनाम आसीत्। परिडा अस्य कौलिक उपाधिः। अस्य पितुर्नाम यशोवन्तस्तथा भाता पर्शुराम आस्ताम् । पितृमातृहीनः सिद्धेश्वरः भ्रात्रा पर्शुरामेण परिपालितः । यच्चोक्तं द्रोणपर्वणि-

'आहे प्रभु मोते कर आपणंक भृत्य। यशोवन्त नन्दन मुं मूरुख अत्यन्त' अपि चात्र- 'जन्मे जन्मे मूर्ख मुं नारायणंक भृत्यर भृत्य । वाक्य देवी भण्डार मुं कलइ भकत यशोवन्तीर नन्दन श्री वासुदेव मम हृदे । शूद्रमुनि सारोला दास लीन हो श्रीकृष्ण पादे ' अत्र यशोवन्ती नन्दन शब्देन स आत्मानं श्रीकृष्णदास अर्थेन कथित इति केचन समर्थयन्ति। जात्या शूद्रोऽयं महापुरुषः प्रकृतपक्षे प्रसिद्धः शाक्तः बभूव। उत्कलीय शक्तिपीठेषु अन्यतमः सारलापीठः झंकडः ग्रामः सिद्धेश्वरस्य जन्मस्थान रूपेण स्थिरीकृतः। असौ'झंकड'ग्रामः कदाचित् कनकपुरः वा कनकावती पाटणा कदाचिद्वा जंखेरपुर कदा अनुज (सान) सा-रोला नाम्ना च परिष्कृतः। यच्चोक्तम् महाभारते आदिपर्वणि-'नीलसुन्दर गिरि उत्तर दिग कोणे । सारस्वत भूमि भ्रतखण्ड ऐशान्ये। चन्द्रभागा बोलि करि नदी एक गोटि। वृद्धमाताङ्क पारुशे महोदधि भेटि से नदी तीररे पर्शुराम ये घाटइ। कनकावती नामे पाटणा प्रकाश ता उत्तरे अनुज सरल बोलि ग्रामे। विजये माहेश्वरी सारला चण्डी नामे ' अन्यत्र- 'कनकपुर पाटणा घर पर्शुराम। मुंहि तार अनुज शारलादास नाम ' यद्वा-

'झंकडपुर वासिनी ये सारला देवी। ताहांकर कुमर मुं श्रीसारला कवि इति। कनकावती-पट्टण-निवासी तद्भ्राता पर्शुरामो नौकावाहक-रूपेण परिचितः आसीत्। झंकडपीठाधीश्वरी अलौकीक शक्ति संपन्ना माता वाग्देवी सारला सिद्धेश्वरं प्रति अतीव प्रसन्ना आसीत् । सारलादेवीद्वारा सः सारलादास इत्युपाधिना विभूषितः । सारलाकृपया हि महाभारतो विरचितः । तथाहि मध्यपर्वणि- जन्मे जन्मे मुंहि शाहास्त्रवादी । पण्डित जन मध्ये मुं न पशिलि प्रसिद्धि' आदि पर्वणि- 'से सिद्धदेवी मोते प्रसन्न होइला। अकलन्ता महाभारत मोते आज्ञा देला जंखेरपुर वासिनी कृपाजल नन्दिनी। ताहार आज्ञा प्रमाणे मुं होइलि शूद्रमुनि से सिद्धदेवी चरणे मोर सेवा। शूद्रमुनि सारोल दासकु गति मुक्ति देवा ' अपि च मध्यपर्वणि-'न पढि पण्डित मुं कलाइं अभ्यास। वदन्ति शूद्रमुनि ग्रन्थिक श्री सारोला दास ' द्रोणपर्वणि-'मूर्ख अपण्डित मुं न जाणइ किछि। किञ्चिते सुदया मोते कलेक पिङ्गलाक्षी' तत्र मध्यपर्वणि-'कुस्थाने वसिलि न वसिलि विप्रगोष्ठी। शिशुबुद्धि मोहर वयस अलपटि' वनपर्वणि-'गिरिजा नन्दिनी ये सारोला चण्डी नाम। ताहांकर सदये किछि कहिलि पुराण रात्र याहा कहइ ताहा दिवसे लिखइ। एणु करि सदये मोते होइले महामायी' इति सारलादासस्य व्यक्तित्व-वैशिष्ट्यं च विषये सयौक्तिकं प्रमाणं वरीवर्ति। सारला महाभारत पर्यालोचनायाः कवेः सारस्वतप्रतिभा अनुमीयते।

विलंकारामायणेऽपि तस्य महानुभावस्य कारुण्यं सिद्धेश्वर नाम्ना प्रतिफलितः। यदुक्तम्'रामायण वृत्तान्त कु निरन्तरे घोष। श्रीराम चरणे भजे सिद्धेश्वर दास' तत्र आश्रमिक पर्वणि-' जगन्माता जहुं प्रसन्न मोते हेले। शूद्रमुनि सारला दास नाम देले' इत्यत्र यदि वा सारलादासो वैष्णवत्वेन निरूपितस्तथापि आपाततः शूद्रमुनिः शाक्त आसीदिति मया पूर्वमुक्तम्। देवी सारलां प्रति तस्य आन्तरिकभक्तिः इत्थं प्रमाणयति महाभारते- 'अदृष्टिकि दृष्टि मुंहि कराइलि आणि। कृपा करिवारु सारला ठाकुराणी । ए पद रचने मुं न करे प्रतिज्ञा। लेखे सारला दिअन्ति मोते याहा आज्ञा जन्महुं मूर्ख मुं पढिनांहि विद्या। न जाणइ जप मन्त्र नुंहइ प्रसिद्ध से माता प्रसादे याहा मने मोर स्फुरे । लेखइ ये वसि नील कल्पवट मूले' इति तं प्रति सारलायाः अनुकम्पा तेन स्वमुखेन प्रदर्शिता। महाकविः सारलादासः उद्दीप्त साधको विशिष्टो विद्वान् संस्कृतज्ञश्च आसीत्। साधनायाः चरमे क्षेत्रे स प्रविष्टः सम्मानितश्च। पूर्वजन्मेऽयं कालिदासो बभूव। जातिस्मरतां प्रमाणीकृत्व त्रिकालदर्शि-मुनिपदवीं प्राप्तवान्। तत्पूर्वजन्मविषयेऽपि तेन भणितम्- प्रथम जन्मरे मुंहि हेलि कालिदास। द्वितीय जन्मरे मुंहि महाकाल ध्वंस तृतीय जन्मरे मुं सार सारलादास कवि। आउ जन्मे मुंहि मर्त्त्यमण्डले जन्मिवि प्रतिजन्मे मुंहि पन्दरलक्ष कथा भावि ।चारिजन्मे षाठिए लक्ष कथा कहिवि उक्त कथा कहि-सारि ए मर्त्त्यमण्डल। तेवे जाइं होइवि मुं शिव द्वारपाल' इति । कार्यान्ते पञ्चमे जन्मनि शिवद्वारपालो भविष्यामीति तस्य प्रतिज्ञापि प्रतिफलिता । स्वकीय कविकर्मविषये तेनोक्तम् चण्डिपुराणे-'प्रथमे श्री रामायण द्वितीये भारत । तृतीये लिखन मुं कलि शिरी भागवत ?' विलंका रामायण (दाण्डी रामायण), महाभारतं चण्डीपुराणानि च अस्य समुज्ज्वल ग्रन्थरत्नानि सन्ति। विलंका रामायणमस्य प्रार्थमिकी रचना । शैली दाण्डिवृत्तम्। निर्दिष्टाक्षर संख्या नास्ति। युद्धवर्णनं चात्र - 'विजिघोष दाउण्डि टमक निसाण। वीरवाजा वाद्य बाजइ घन घन ? राउत माहुन्त पाइक पण्डिकार। सेनापतिमाने होइले बाहार ? सातलक्ष पदाति पाञ्चलक्ष रथ। येगार सहस्र मत्तहस्ती उदण्ड ए क्षेत्र ' चान्ते-'रामायण रचनाकु नि-रन्तरे घोष। श्रीराम चरणे भजे सिद्धेश्वर दास' विलंका-रामायणमस्य कवेः न कृतिरिति ये कथयन्ति तेषां कृते उपर्युक्तं प्रमाणं ग्रहणीयम्। ननु सिद्धेश्वरः सारलादातात् भिन्नश्चेन्न । यतो हि विलंका रामायणे-' सारला दास शरण पशे से चरणे । मूर्ख मुंहि अपण्डित शास्त्र हिं न जाणे बुद्धि ध्यान ज्ञान योग लय किछि नांहि। ग्रन्थ भेदिवाकु शक्ति मोर अवा कांहि श्री सारला चण्डीङ्कर सदा अटे दास। आज्ञारे मुं शास्त्र किछि करिछि अभ्यास से याहा करन्ति आज्ञा मुं ताहा लेखइ। अपण्डित मूर्ख मोर शास्त्र ज्ञान नांहि ' इति। अपि चात्र- 'जय जय अपर्णा गो तो पादे शरण। सारला दासकु मात कर परित्राण आहे साधु सुज्ञजने मोर निवेदन। दोषा दोष थिले क्षमा करिव आपण। झंकड वासिनी मात अभया कृपारे। जनहिते ए ग्रन्थकु कलि मुं भाषारे' इति ग्रन्थकृत्विवक्षा स्फ्ष्टा। चण्डीपुराणं देवीभागवतनाम्ना ख्यातम् किन्तु न देवीभागवतस्यानुवादरूपम्। माहेश्वर्याः दुर्गायाः अवतार प्रसंगोऽत्र वर्णितः स्वतन्त्ररीत्या। अनुपम चरित्राणां वर्णनमपि अत्र काल्पनिकम् ।वर्णनाविलासोऽत्र चमत्कारः। रूपवर्णन- युद्धवर्णन-प्रसंगे च कवेः सामर्थ्यम् उल्लेखनीयम्। तथाहि महिषासुरस्य अभियान प्रसंगे- 'येतेबेले दुरान्तक माडि याउअछि। जन मनुष्य सहिते न रहन्ति किछि येसनेक वनस्त भांगन्ति वात घाते। सेहिपरि हुअन्ति दइतर पाद घाते देवे अपसरन्तयिवण बल देखि। मानव मात्रकु छार किस ताहा लेखि गान्धार देश पारिजातेक देश नेपालि देश वारस्वती । सकल देशमान होउंछन्ति सन्धन्ति नाट चोट कर्णाट तिहुडि चुन्देरी । भांगिण नग्रन्त भण्डार दूर करि ' इति । रूपवर्णनायां कवेः कौशलमत्यन्तम् उपभोग्यम्। चण्डमुण्डमुखाभ्यां दुर्गारूपवर्णनमत्र मनोरमम्-'स्वामि नवसृष्टि रचन्ता छाडिण प्रजापति। केतेकाल गढिला अमूल्य रत्नकान्ति अत्यन्त समत नोहइ वक्ष स्थल। तथि उपरे भारा ताहार कुच मण्डल एते बड भारा अटइ क्षीण मझि । उच्चुर्ग नोहै सूक्ष्म अटइ सुभागि अनेक युगे घटणा कला स्तिरी रत्नकान्ति। भांगि केतेबेले से गढिव प्रजापति ' इति ।

सारलापूर्वं 'महाभारत' मिति विशालो ग्रन्थ ओडिआ साहित्ये प्रागेव नासीत् । असाधारण संस्कृतविद्वान् सारलादासः उत्कलभाषया सर्वादौ महाभारतस्य आयोजनं चकार । स्वतन्त्र शैल्या तेन महाभारतस्य विषयवस्तु आदिशक्तिकटाक्षेण उपस्थापितम् । तथाहि महाभारते- अगाध सागर एहु श्रीमहाभारत । सबु सञ्चपि कहिले हेब अप्रमित ? एसन बिचारि ठिके ठिके ये कहिबि । मो हृदे माला परम माहेश्वरी देवी ? इति । लक्षश्लोकयुक्तं अष्टादशपर्व विशिष्टं महाभारतं व्यासकृतं तावत् 1आदिपर्व 2-सभापर्व 3-वन-पर्व 4-विराट पर्व 5-उद्योग पर्व 6-भीष्म पर्व 7-द्रोण पर्व 8-कर्णपर्व 9-शल्यपर्व 10-सौप्तिक पर्व 11-स्त्री पर्व 12-शान्तिपर्व 13-अनुशासन पर्व 14-अश्वमेध पर्व 15-आश्रमिक पर्व 16-मौषक पर्व 17-महाप्रस्थानिक पर्व 18-स्वर्गारोहण पर्व प्रमुखानि अष्टादशानि प्रसिद्धानि । सारला महाभारते तु 1-आदि पर्व 2-मध्य पर्व 3-सभापर्व 4-वन पर्व 5-विराट पर्व 6-उद्योग पर्व 7-भीष्म पर्व 8-द्रोण पर्व 9-कर्ण पर्व 10-शल्य पर्व 11-गदा पर्व 12-कांइशिका पर्व 13- नारी पर्व 14-शान्ति पर्व 15-आश्रमिक पर्व 16-अश्वमेध पर्व 17-मूषली पर्व 18-स्वर्गारोहण पर्व भेदेन भिद्यन्ते । मूल संस्कृत व्यासकृत महाभारतं कदाचित्तेन प्रत्याख्यातम् । कदाचित् स्वतन्त्रमतमुपस्थापितम् । महाभारतस्य अन्तिम युद्ध समये दुर्योधनस्य रक्तनदी सन्तरण प्रसंगं सारलादासस्य वर्णन अतीव भयानकम् । रण क्षेत्रे रक्तनदी गभीरा प्रवहति तीक्ष्णा स्त्रोतस्विनी । मृतशवा भासमाना । एकपार्श्वादपरपार्श्वं यातुं यदा सः एकैकान् शवान् गृह्णाति तदा ते रक्तनद्यां निमज्जन्ति । कियत्कालमपि तं धारयितुं समर्था न भवन्ति । किं करिष्यामीति चिन्ता दुर्योधन मनसि जर्जरिता अकस्मात्सः अपर शवं गृह्णाति । सः हृष्टपृष्ट आसीत् , बलिष्ठ च आसीत् । तपृष्ठमादाय सुखेन नदी पारितः । उक्तं च- 'केहि रकत नदीरु न कलेक पारि । केवण महात्मा मोर एडे उपकारी ?' इति कस्त्वम् महात्मा मम परम सहायक इति मनसि निधाय यदा शवं सम्मुखीकृतः भो भो इति स्वरेण क्रन्दयामास । लक्ष्मणकुमारोऽसौ महात्मा दुर्योधनस्य पुत्र आसीत् । क्रन्दनरतो दुर्योधनः भणति- ए सोम वंशरे तुहि एका पुत्र गोटि । वंश वुडाइला मोर काटि देला तोटि ? जन्म ठारु आजि याए चाहि तोर मुख । वञ्चुथिलि एवे मुंहि होइलि निरेख ? नेत पाट पतनी ये नाना पुष्पगभा । रकते कर्दम एवे होइलारे वावा ? अमरावतीर प्राये तो भुवन गोटि । ताहा तु उपेक्षा करि रक्तमांसे लोटि ? मृगनाभ कस्तूरी मुं तो देहे लेपइ । एवे पोति याउ अछि माटिरे मिशाइ ? अति सुकुमार तुरे कुमार लक्ष्मण । वर्षे वाहुनिले तोर न सरिव गुण ? वावु नव सृष्टि चिन्ता छाडि प्रजापति । केतेकाल वसि यत्ने गढिला तो मूर्त्ति ? मोहर पराए पिता तोर आउ नोहु । तोहर पराए पुत्र जन्मे जन्मे हेउ ? ' इत्यत्र दुर्योधनस्य मनोदशा सारला साहित्ये स्वतन्त्रा प्रतीयते । स्थान काल पात्रभेदेन बहुषु क्षेत्रेषु सारला महाभारतस्य स्वतन्त्रता प्रत्यक्षीक्रियते । पर्वभेदेन सारला महाभारते विशेषता प्राप्यते । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जागर्ति भूतानि सा निशा पश्यतो मुनेः ?' इति भगवद्गीतावाक्यं तेन सरल भाषया भीष्म पर्वणि व्याख्यातम् । तथाहि- 'प्राणिंकि ये ब्रह्मज्ञान विभावरी परि । तंहिरे योगी जन हुअन्ति उजागरी ? एइ येंउ जाण प्राणींक दिवस । योगीजन मानंकु से अन्धार सदृश ? इति अन्यत्रापि 'वासांसि जीर्णानि यथा विहाय' इत्यस्य व्याख्यानावसरे महाभारते उक्तम्- चीरा लुगा छाडि नूआ पिन्धिला पराए । आत्मा याइ करि पुणि नूआ देह पाए ? आत्माकु टि शस्त्र केवे न पारइ काटि । अग्नि पोडि न पारन्ति आत्माकु किरीटि ? सढाइ न पारे पुणि ताहाकु ये जल । सुखाइ न पारे ताकु अणुए अनिल ? इति गीतायाः गूढतत्त्वं तेन स्वमुखेन प्रकम्पितम्। महाकवि सारलादास उत्कलस्य वरपुत्रः। ओडिआ साहित्यक्षेत्रे तस्य अवदानमवर्णनीयम्। अनुपमा तस्य महिमा। तस्मै भारती वरपुत्राय नमो नमः।


**सहायक ग्रन्थाः**

1-शारला चरित- मृत्युञ्जय रथः
2-सारला स्मरणिका-प्रजातन्त्र प्रचार समित्तिः
3-सारला दास- पठाणि पट्टनायकः
4-ओडिआ साहित्यर इतिहास सम्पर्करे-1म भाग अध्यापक हेमन्त कुमार दासः अध्यापकः निशामणि मिश्रः
5-प्रफेसर कृष्णचन्द्र साहु रचना सम्भार-5म भाग
6-ओडिआ साहित्य इतिहासर समालोचना-विनायक मिश्रः
7-ओडिसार इतिहास-प्यारीमोहन आच्यार्यः
8-ओडिशार नूतन इतिहास ,1म भाग विनायक मिश्रः
9-सन्थ भक्ति साहित्य ,ओडिआ साहित्य एकाडेमी
10- सारला महाभारत –आदिपर्व1म ख-संग्राहक –आर्त्तवल्लभ महान्तिः
11- सारला महाभारत –आदिपर्व2य ख-संग्राहक –आर्त्तवल्लभ महान्तिः
12- सारला महाभारत –मध्यपर्व1म ख-संग्राहक –आर्त्तवल्लभ महान्तिः
13- सारला महाभारत –मध्यपर्व2य ख-संग्राहक –आर्त्तवल्लभ महान्तिः
14-ओडिआ साहित्यर इतिहास संपर्करे-1म अध्यापक हेमन्त कुमार दासः ,निशामणि मिश्रः


नन्दप्रदीप्तकुमारः

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा
॥श्री राम कथा॥

**रामाय रामभद्राय रामचन्द्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः॥**

भगवद्भक्तिभूषणः श्रीभरतः

प्रेम्णो नामानि मनः क्वचित् इतस्ततो न गन्तव्यमिति विचार्य वयं सदा जागरूको भवेम। महाकवेः लेखन्या श्रीभरतमहाभागस्य दिव्यप्रेमादर्शो व्यक्तो जातः। यस्य प्रभावो मम हृदयमह्लादितं कुर्वन् सदा आकृष्टं करोति-

सिय राम प्रेम पियूष पूरन होत जनमु न भरत को।
मुनि मन अगम जम नियम सम दम बिषम ब्रत आचरत को?
दुख दाह दारिद दंभ दूषन सुजस मिस अपहरत को।
कलिकाल तुलसी से सठन्हि हठि राम सनमुख करत को?

प्रातःस्मरणीयः पूज्यपादः गोस्वामी तुलसीदासमहाभाग उक्तछन्दसोऽन्तिमपंक्तौ कलिकालस्य काठिन्यं प्रतिं संकेतं कृतवानस्ति। किन्तु तस्मिन् प्रेममार्ग एव केवलं निरापदोऽस्ति।

भगवत्प्रेमरसरसिकाः! समागच्छन्तु, वयं सर्वेऽपि तत्प्रेमामृतरसपानं कर्तुं सत्प्रयासं कुर्याम, यद्भगवत्प्रेमरसं महाकविना अस्मत्कृते स्व-लेखन्या सुलभं कारितमस्ति।

एकदा लोकलोचनसुखप्रदाता भगवान् श्रीराघवेन्द्रः भ्रातृमित्रपरिकरैः सह लोकपावनीसरय्वाः समुज्जवलपुलिने कन्दुकक्रीडायाः संकल्पं कृतवान्। कस्याञ्चित् क्रीडायां द्वौ दलौ भवेतामिति स्वाभाविक आसीत्। एकस्य दलस्य नेतृत्वं कुर्वन् आसीत् स्वयमेव राघवः, किन्तु अपरदलस्य नेतृत्वं कः करिष्यतीति समस्या समक्षमासीत्। श्रीलक्ष्मणमहाभागात् कदापि यां सम्भावनां कर्तुं न शक्नोति यतोहि क्रीडायामपि श्रीरामस्य विपक्षं तस्य कृतेऽसह्यासीत्। एतदपि बहूच्चकोट्याः प्रेमस्वरूपो वर्तते, अत एवात्र किञ्चदपि संदेहं न कुर्यात्, किन्तु तदपि क्रीडा कथं भवितव्येति प्रश्नो विचारणीय आसीत्।

**-क्रमशः**

आचार्य अरविन्द पाण्डेय

## शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः

काव्ये नादसौन्दर्यं सम्पाद्यते। अस्यालङ्कारस्य लक्षणे विश्वनाथा चार्येण उक्तम् - 'अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्। एकस्थानो च्चार्यत्व रूपस्य स्वरव्यञ्जन समष्टिभूतस्य शब्दस्य पुनरावृत्ति रनुप्रास इत्यर्थः। ईशोप निषदि प्राप्तस्यानु प्रासालङ्कारस्य उदाहरणं यथा- यस्मिन्सर्वानि भूतान्यात्मैवा भूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते। ततो भूय इव ते तमो य उ विद्यायां रताः। अनयोः मन्त्रद्वयोर्मध्ये अनेकस्य व्यञ्जनस्य एकधा बहुधा वा पुनश्च एकव्यञ्जनस्य सकृद्वा असकृद्वा पुनरुच्चारणं तिष्ठति। अतः मन्त्रयुगले वृत्त्यनुप्रासालङ्कारः विद्यते, यस्य लक्षणे विश्वनाथा चार्यस्य मतं यथा एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते।


**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**प्रवीण चन्द्र श्रीवास्तव**
(निदेशक चन्द्रा स्कैन प्रा.लि)

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**




# परमात्मनः ईक्षणेनैव सा कार्यप्रवृत्ता भवति

जीवादिपदार्थचतुष्टयं ब्रह्मसम्बद्धं कर्म केवलं जड़ं तच्च अदृष्टादिनानाशब्दैः व्यवहृयते। कर्म अनादि परन्तु विनाशि। ब्रह्म विशुद्धः अनन्तगुणयुक्तः अचिन्त्यशक्तिमान् सच्चिदानन्दविग्रहः श्रीकृष्ण एव जगत्कारणः। अयं नित्यज्ञानानन्दादियुक्तः विभुः। प्रकृतिना अस्पृष्टः सन् स्वतन्त्रः। अयमेव जीवस्य भोगापवर्गयोः विधानं करोति। रूपहीनः सन्नपि भक्तानाम् उद्धाराय धृतविग्रहो भवति। लोकानां पालनाय एव अयं धरायामवतरति। तथाहि त्रिविधा अवताराः स्वीक्रियन्ते अंशावतारः गुणावतारः शक्त्यावेशावतारः। तत्र अंशावतारः द्विविधः पुरुषावतारः यथा कारणार्णवशायी भगवान् नारायणः, लीलावतारः मत्स्यकूर्मादिः। गुणावतारो यथा ब्रह्मविष्णुमहेशादिः। शक्त्यावेशावतारः यथा सनकव्यासादिः। जीवः ब्रह्मणः एव एकदेशः परन्तु ततः भिन्न अणुपरिमाणः। भवति अयं ज्ञाता सत्त्वादिगुणत्रययुक्तः परमात्माधीनः श्रीहरेः नित्यदासस्वरूपः। परमात्मनः अंशिनः अंशः किञ्च तस्यैव चैतन्यरूप इति कृत्वा अभिन्नः, अणुपरिमाणः ईश्वरनियम्य इत्यतः भिन्नोऽपि भवति जीवः। एवं परमेश्वरस्य अचिन्त्यशक्तिप्रभावेण भिन्नोऽपि अभिन्नः इत्यतः दर्शनमिदम् अचिन्त्यभेदाभेद इति उच्यते। परमात्मनः अंशोऽपि द्विप्रकारकः भवति स्वांशः स्वरूपांशः च। स्वांशो नाम मत्स्यादिः अवतारः स्वीकरणीयः। स्वरूपांशो नाम जीवः। परमात्मा मायाशक्तिप्रभावेण क्षणमात्रेणैव जगत् सृजति। इयं माया भवति सत्त्वरजस्तमसां साम्यावस्था तथा नित्या। माया प्रकृतिः अविद्या इत्यादिनानाशब्दैः व्यवहृयते। मायाशक्त्या जीवशक्त्या च परमेश्वरः जगत् उपादानकारणं पराशक्त्या च निमित्तकारणं भवति। एतेन परमात्मनः कूटस्थत्वस्य विरोधो न भवति। यतः उपादानकारणस्यैव परिणामो भवति न तु निमित्तकारणस्य। निमित्तकारणरूपेण स कूटस्थ एव तिष्ठति। जगन्निर्माणाय परमेश्वरस्य ईक्षणं सत्यं, तस्मादेव पृथिव्यादिभूतानामपि सत्यत्वम्।

**अत्र सृष्टिप्रक्रिया एवंरूपा -** आदौ परमेश्वर एव आसीत्। ततः माया उत्पन्ना, परमात्मनः ईक्षणेनैव सा कार्यप्रवृत्ता भवति। तत अक्षरवाच्यम् अव्यक्तं जायते। अक्षरात् महतः उत्पत्तिः महतः अहङ्कारस्य। सात्त्विकाहङ्कारात् मनसः देवतानां च। राजसाहङ्कारात् इन्द्रियाणामुत्पत्तिः भवति। तामसाहङ्कारात् शब्दतन्मात्राणां ततः पञ्चभूतानि जायन्ते। सर्वत्रैव ब्रह्म कारणात्मना प्रविश्य सृष्टिकार्यं सम्पादयति। अत्र मुख्यप्राणः साक्षात् ब्रह्मणः उत्पन्नः।